ग्यत्वात्, क्वचित् कदाचिदितरकारणविलम्बादेव कार्यविलम्बात् । यदि च पुंस्त्वस्यापि मनुष्यत्वादिवद् ज्ञानादिसंपादकतया परम्परया मोक्षाङ्गता कल्प्यते, तदा स्त्रीत्वेनापि पृथगेषा कल्पनीया, गुरुणाऽप्यक्लीबत्वेन वा; लाघवमात्रेणागमस्यापवदितुमशक्यत्वात्, परस्यापि स्त्री-क्लीबयोरुभयोः कारणविघटकत्वकल्पने गौरवसाम्याच्च ।

न च पुरुषानभिवन्द्यत्वात् स्त्रीणां न मुक्तिरित्यभिधानीयम्; असिद्धेः, भगवज्जनन्यादीनां जगद्वन्द्यत्वश्रवणात्, आचार्यानभिवन्द्यत्वेन शिष्ये, साधुमात्रानभिवन्द्यत्वेन शैक्षे वा व्यभिचारात्, पुरुषानभिवन्द्यत्वस्य मुक्तिप्राप्त्यप्रतिबन्धकत्वेनाप्रयोजकत्वाच्च । यदि च तदनभिवन्द्यत्वेन तदपेक्षयानुत्तमगुणत्वाद् न स्त्रीणां मुक्तिरितीष्यते, तदा तीर्थकृद्गुणापेक्षया गणधरादेरप्यनुत्तमत्वाद् मुक्तिप्राप्तिर्न भवेत् । अथाशेषकर्मक्षयनिबन्धनस्याध्यवसायस्य गणधरादिषु तीर्थकृदपेक्षया तुल्यत्वाद् अयमदोषः, तदा समानमेतदार्यिकास्वपि । यदि च तीर्थस्य भगवदभिवन्द्यत्वात् प्रथमगणधरस्यापि तीर्थशब्दाभिधेयत्वेन तथात्वाद् न दोषः, तदा चातुर्वर्ण्यश्रमणसंघस्यापि तीर्थशब्दाभिधेयत्वादार्यिकाणामपि तत्रान्तर्भावात् तुल्यमेतत् । यत्तु 'धर्मे पुरुषोत्तमत्वविपर्ययशङ्कया स्त्रीणां चारित्रग्रहणं न युक्तम्' इति; तदसभ्यप्रलपितम्; आज्ञाशुद्धभावेन यथाशक्ति प्रवर्तमानानामार्यिकाणामीदृशशङ्कानुदयात्, तस्याः पापजन्यत्वात् । अत एव भगवतामनलङ्कृतविभूषितत्वादिविपर्ययधीप्रसङ्गादाभरणादिभिर्विभूषा न विधेया' इति हतं परेषां मतम्, तत्करणस्य शुभभावनिमित्ततया कर्मक्षयावन्ध्यकारणत्वात्, विपर्ययशङ्कायाश्च विना कल्मषमनुदयात् । यदि च ध्येयावस्थायां भगवता भूषणादेरनङ्गीकृतत्वाद् न तत्प्रतिकृतौ तद् विधेयम्, तदा समज्जना-ऽङ्गराग-पुष्पादिधारणस्यापि तदवस्थायां भगवताऽनाश्रितत्वाद् न तत् तत्र विधेयं स्यात् । अथ मेरुमस्तकादिषु

तदभिषेकादावपीन्द्रादिभिस्तस्य विहितत्वादस्मदादिभिरपि कृतानुकरणादिभिर्हेतुभिस्तत् तत्र विधीयते, तर्हि तत एवाभरणादिविभूषादिकमपि विधेयम्, कृतानुकरणादेः समानत्वात्। न चैवमत्र स्पर्धासाधनम्, किन्तु भगवतो निर्मलत्वशङ्कानिरासेन भावाभिवृद्धिनिबन्धनमिति दिक्।

अथाकल्याणभाजनत्वाद् न मुक्तियोग्याः स्त्रिय इति चेत्। न, तीर्थकरजननात्; न ह्यतः परं कल्याणमस्ति लोके। अथ हीनबलत्वादेव स्त्रीणां न मुक्तिरिति चेत्। न, रत्नत्रयसाम्राज्ये हीनबलत्वस्याप्रयोजकत्वात्; अन्यथा स्त्रीभ्योऽपि हीनबलाः पङ्ग्वादयः पुरुषा रत्नत्रयसाम्राज्येऽपि न मुच्येरन्। हीनबलानां विशिष्टचर्यारूपं चारित्रमेव न स्यादिति चेत्। न, यथाशक्त्याचरणरूपस्य सत्त्वसाध्यस्य तस्य तासामप्यविरोधात्। न हि दुर्धरब्रह्मचर्यधारिणीनामसदभियोगादौ तृणवत्प्राणपरित्यागं कुर्वाणानां सत्त्वं तासां नातिरिच्यत इति वक्तुं शक्यम्। न चानुपस्थाप्यपाराञ्चितकानुपदेशेन तासु सत्त्वहीनता सिध्यति, सत्त्वापेक्षस्यैव शास्त्रे विशुद्ध्यनुपदेशात्, योग्यतापेक्षस्यैव तत्र तद्वैचित्र्योपदेशात्; उक्तं च—

"संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे। रोगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ॥१॥" इति।

तदेवं सम्पूर्णयोग्यतामभिप्रेत्योक्तं यापनीयतन्त्रे— "णो खलु इत्थी अजीवे, ण यावि अभव्वा, ण यावि दंसणविरो-

---

1 नो खलु स्त्री अजीवा, न चाप्यभव्या, न चापि दर्शनविरोधिनी, नो अमानुषा, नो अनार्योत्पत्तिः, नो असंख्येयायुष्का, नो अतिक्रूरमतिः, नो नोपशान्तमोहा, नो न शुद्धाचारा, नो अशुद्धशरीरा, नो व्यवसायवर्जिता, नो अपूर्वकरणविरोधिनी, नो नवगुणस्थानरहिता, न अयोग्या लब्धेः, नो अकल्याणभाजनम्, इति कथं नोत्तमधर्मसाधिका ?।

हिणी, नो अमाणुस्सा, नो अणारिउत्पत्ती, नो असंखाउआ, नो अइक्रूरमई, नो न उवसंतमोहा, नो न सुद्धाचारा, नो असुद्धबोंदी, नो ववसायवज्जिआ, नो अपुव्वकरणविरोहिणी, नो नवगुणठाणरहिआ, नो अजोग्गा लद्धीए, नो अकल्ला-भायणं ति कहं न उत्तमधम्मसाहगा ?” इति । एवं व्यवस्थितेऽनुमानमप्याहुः– मनुष्यस्त्रीजातिर्मुक्त्युपहितव्यक्तिमती, प्रव्रज्याधिकारिजातित्वात्, पुरुषजातिवत् । न च तासां प्रव्रज्याधिकारस्य पारम्पर्येणैव मोक्षहेतुतया निर्वाहादप्रयोजक-त्वम्; न चैवमल्पायाससाध्ये तद्धेतुदेशविरत्यादावेव प्रवृत्तिः स्यात्, न तु बह्वायाससाध्यसर्वविरताविति वाच्यम्; देशविरत्यादिभूयोभवघटितपारम्पर्येण मोक्षहेतुत्वेऽपि चारित्रस्यैवाल्पभवघटितपारम्पर्येण मोक्षहेतुत्वात्, तादृशपारम्पर्येण मोक्षार्थितया तत्र प्रवृत्तेर्युक्तत्वात्; कथमन्यथा दुःषमाकालवर्तिनो मुमुक्षवस्तत्र प्रवर्तिष्यन्ते ? इति वाच्यम्, तासां चारित्रस्य पारम्पर्येणैव मोक्षहेतुत्वाश्रवणात्, साक्षात्कारणस्य चारित्रस्यासति प्रतिबन्धके तद्भव एव मुक्तिप्रापकत्वोपपत्तेः, स्त्रीत्वस्य प्रतिबन्धकत्वे मानाभावात्; अन्यथा तत्र साक्षाच्चारित्रार्थितयैव प्रवृत्त्यापत्तेरिति । एवं ‘मनुष्यस्त्री काचिद् निर्वाति, अवि-कलतत्कारणत्वात्, पुरुषवत्’ इत्यप्याहुः । तदेवं स्त्रीमुक्तिसिद्धेः सिद्धाः पञ्चदश सिद्धभेदाः । इति सिद्धमदः प्रासङ्गिकमिति सर्वमवदाततरम् ॥ ५४ ॥

एता वार्ता उपश्रुत्य भावयन्बुद्धिमान्नरः । इहोपन्यस्तशास्त्राणां भावार्थमधिगच्छति ॥५५॥
शतानि सप्त श्लोकानामनुष्टुप्छन्दसां कृतः । आचार्यहरिभद्रेण शास्त्रवार्तासमुच्चयः ॥५६॥

॥४३०॥

कृत्वा प्रकरणमेतद् यदवाप्तं किञ्चिदिह मया कुशलम्।
भवविरहबीजमनघं लभतां भव्यो जनस्तेन ॥ ५७ ॥

यं बुद्धं बोधयन्तः शिखि-जल-मरुतस्तुष्टुवुर्लोकवृत्त्यै
ज्ञानं यत्रोदपादि प्रतिहतभुवनालोकवन्ध्यत्वहेतुः ।
सर्वप्राणिस्वभाषापरिणतिसुभगं कौशलं यस्य वाचां
तस्मिन् देवाधिदेवे भगवति भवता धीयतां भक्तिरागः ॥ ५८ ॥

॥ इति श्रीयाकिनीमहत्तरासूनुश्रीहरिभद्रसूरिविरचितं श्रीमदुपाध्यायकृतटीकासमेतं शास्त्रवार्तासमुच्चयप्रकरणं संपूर्णम् ॥

॥ समाप्तोऽयं ग्रन्थः ॥

# मुद्रितग्रन्थानां सूचीपत्रम् ।

| | | |
|---|---|---|
| ९ | श्रीदानकल्पद्रुमः– परमगुरुश्रीसोमसुन्दरसूरिशिष्य-श्रीजिनकीर्तिसूरिकृतः । | ०–६–० |
| १० | योगफीलोसोफी– By, ( अंग्रेजी ) वीरचंद राघवजी गांधी । | ०–५–० |
| ११ | श्रीजल्पकल्पलता– श्रीरत्नमण्डनकृता । | ०–३–० |
| १२ | श्रीयोगदृष्टिसमुच्चयः– श्रीहरिभद्रसूरीश्वरकृतः । | ०–३–० |
| १३ | कर्मफीलोसोफी– *By*, (अंग्रेजी) वीरचंद राघवजी गांधी । | ०–५–० |
| १४ | आनन्दकाव्यमहोदधि मौक्तिकस्य प्रथमो भागः ( पृथक् पृथक् साधुकृतरासः ) । | ०–१०–० |
| १५ | श्रीधर्मपरीक्षा– धर्मसागरोपाध्यायशिष्यपण्डितपद्मसागरगणिविनिर्मिता ( औपदेशिककथाग्रन्थः ) । | ०–५–० |
| १६ | श्रीशास्त्रवार्तासमुच्चयः– ( प्रथमो विभागः ) । | २–०–० |
| १७ | श्रीकर्मप्रकृतिः– श्रीशिवशर्मपादप्रणीता श्रीमलयगिरिवृत्तिसहिता । | ०–१४–० |

प्राप्तिस्थानम्–

जामनगरीयन शेठ देवचन्द लालभाई पुस्तकोद्धार फण्ड ओफीस ।

c/o शेठ देवचन्द लालभाई धर्मशाला ।

बडेखां चकलो "सुरत सिटी" ।

॥ इति श्रीशास्त्रवार्तासमुच्चये प्रथमो विभागः समाप्तः ॥

इति श्रेष्ठिदेवचन्द-लालभाई-जैनपुस्तकोद्धारे ग्रन्थाङ्कः १६ ।